वलिनः॥३८॥ पृथक्त्वैकत्ववितर्कविचारसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवर्ती॥
३९॥ त्र्येकयोगकाययोगायोगानां॥४०॥ एकाश्रये सवितर्कविचारे पूर्वे॥४१॥ अवीचारं॥
४२॥ वितर्कः श्रुतं॥४३॥ वीचारोर्थव्यंजनयोगसंक्रांतिः॥४४॥ सम्यक्दृष्टिश्रावक
वियोजकदर्शनमोहक्षपकोपशमकोपशांतमोहक्षपकक्षीणमोहजिनाः
क्रमशोसंख्येयगुणनिर्जराः॥४५॥ पुलाकवकुशकुशीलनिर्ग्रंथस्नातका निर्ग्रंथाः॥४६॥
संयमश्रुतप्रतिसेवनातीर्थलिंगलेश्योपपादस्थानविकल्पतः साध्याः॥४७॥ इति तत्वा
र्थाधिगमे मोक्षशास्त्रे नवमोध्यायः॥ ९ ॥ मोहक्षया
णांतरायक्षयाच्च केवलं॥१॥ बंधहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः॥२॥

विनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरं॥२०॥नवचतुर्दशपंचद्विभेदायथाक्रमंप्रा
ग्ध्यानात्॥२१॥आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्था
पना॥२२॥ज्ञानदर्शनचारित्रोपचाराः॥२३॥आचार्योपाध्यायतपस्विशैक्षग्लानगण
कुलसंघसाधुमनोज्ञानां॥२४॥वाचनापृच्छनानुप्रेक्षाम्नायधर्मोपदेशाः॥२५॥बाह्याभ्य
न्तरोपध्योः॥२६॥उत्तमसंहननस्यैकाग्रचिंतानिरोधोध्यानमांतर्मुहूर्तात् २७ आर्त्तरौ
द्रधर्म्यशुक्लानि॥२८॥परेमोक्षहेतू॥२९॥आर्त्तममनोज्ञस्यसंप्रयोगेतद्विप्रयोगायस्मृति
समन्वाहारः॥३०॥विपरीतंमनोज्ञस्य॥३१॥वेदनायाश्च॥३२॥निदानंच॥३३॥तदविरत
देशविरतप्रमत्तसंयतानां॥३४॥हिंसानृतस्तेयविषयसंरक्षणेभ्योरौद्रमविरतदेशविरत
योः॥३५॥आज्ञापायविपाकसंस्थानविचयायधर्म्यं॥३६॥शुक्लेचाद्येपूर्वविदः॥३७॥परेके

बरनिर्ज्जरालोकबोधिदुर्ल्लभधर्म्मस्वाख्यातत्वानुचिंतनमनुप्रेक्षाः॥७॥मार्गच्यवननिर्ज्ज
षोढव्याः परीषहाः॥८॥क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्या
क्रोशवधयाचनालाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि॥९॥सूक्ष्
म्मसांपरायछद्मस्थवीतरागयोश्चतुर्द्दश॥१०॥एकादशजिने॥११॥बादर
१२॥ज्ञानावरणेप्रज्ञाज्ञाने॥१३॥दर्शनमोहांतराययोरदर्शनालाभौ॥१४॥चारित्रमो
हेनाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्काराः॥१५॥वेदनीयेशेषाः॥१६॥
एकादयोभाज्यानियुगपदेकस्मिन्नैकोनविंशतिः॥१७॥सामायिकछेदोपस्थापनापरि
हारविशुद्धिसूक्ष्मसांपराययथाख्यातमितिचारित्रं॥१८॥अनशनावमोदर्यवृ
रिसंख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशाबाह्यंतपः॥१९॥प्रायश्चि

र्याणां॥१३॥आदितस्तिसृणामंतरायस्यचत्रिंशत्सागरोपमकोटीकोटयःपरास्थितिः॥१४
सप्ततिर्मोहनीयस्य॥१५॥विंशतिर्नामगोत्रयोः॥१६॥त्रयस्त्रिंशत्सागरोपमाण्यायुषः॥१७॥
अपराद्वादशमुहूर्त्ताः॥२०॥विपाकोनुभवः॥२१॥सयथानाम॥२२॥ततश्चनिर्जरा॥२३
नामप्रत्ययाःसर्वतोयोगविशेषात्सूक्ष्मैकक्षेत्रावगाहस्थिताःसर्वात्मप्रदेशेष्वनंतानंत
प्रदेशाः॥२४॥सद्वेद्यशुभायुर्नामगोत्राणिपुण्यं॥२५॥अतोन्यत्पापं॥२६॥इतितत्वार्थाधि
गमेमोक्षशास्त्रेअष्टमोध्यायः॥ ८ ॥आस्रवनिरोधःसंवरः॥१॥सगुप्तिसमि
तिधर्मानुप्रेक्षापरीषहजयचारित्रैः॥२॥तपसानिर्जराच॥३॥सम्यग्योगनिग्रहोगुप्तिः॥४॥
ईर्याभाषैषणादाननिक्षेपोत्सर्गाःसमितयः॥५॥उत्तमक्षमामार्दवार्जवसत्यशौचसंयम
तपस्त्यागाकिंचन्यब्रह्मचर्याणिधर्मः॥६॥अनित्याशरणसंसारैकत्वान्यत्वाशुच्यास्रवसं

नवचाष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपंचभेदाः यथाक्रमं ॥५॥ मतिश्रुतावधिमनःप
केवलानां ॥६॥ चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रच
श्च ॥७॥ सदसद्वेद्ये ॥८॥ दर्शनचारित्रमोहनीयाकषायकषायवेदनीयाख्यास्त्रि
द्विनवषोडशभेदाः सम्यक्त्वमिथ्यात्वतदुभयान्यकषायकषायौ हास्यरत्यरतिशोक-
जुगुप्सास्त्रीपुंनपुंसकवेदाः अनंतानुबंध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनविकल्पा
कशः क्रोधमानमायालोभाः ॥९॥ नारकतैर्यग्योनमानुषदैवानि ॥१०॥ ग
निर्माणबंधनसंघातसंस्थानसंहननस्पर्शरसगंधवर्णानुपूर्व्यागुरुलघूपघातपरघा
घातोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तिस्थि
राःकीर्तिसेतराणि तीर्थकरत्वं च ॥११॥ उच्चैर्नीचैश्च ॥१२॥ दानलाभभोगोप-

॥दशसूत्र॥
॥१३॥

पातपुद्गलक्षेपाः॥३१॥कंदर्प्पकौत्कुच्यमौखर्य्यासमीक्ष्याधिकरणोपभोगपरिभोगानर्थ
क्यानि॥३२॥योगदुःप्रणिधानानादरस्मृत्यनुपस्थानानि॥३३॥अप्रत्यवेक्षिताप्रमार्जितोत्स
र्गादानसंस्तरोपक्रमणानादरस्मृत्यनुपस्थानानि॥३४॥सचित्तसंबंधसन्मिश्राभिषवदुः
पक्काहाराः॥३५॥सचित्तनिक्षेपापिधानपरव्यपदेशमात्सर्य्यकालातिक्रमाः॥३६॥जीवित
मरणाशंसामित्रानुरागसुखानुबंधनिदानानि॥३७॥अनुग्रहार्थंस्वस्यातिसर्गो दानं॥३८॥
विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः॥३९॥इतितत्वार्थाधिगमेमोक्षशास्त्रेसप्तमो
ध्यायः ॥ ७ ॥मिथ्यादर्शनाविरतिप्रमादकषाययोगाबंधहेतवः॥१॥
सकषायत्वाज्जीवः कर्म्मणोयोग्यान्पुद्गलानादत्तेसबंधः॥२॥प्रकृतिस्थित्यनुभागप्रदे
शास्तद्विधयः॥३॥आद्योज्ञानदर्शनावरणवेदनीयमोहनीयायुर्नामगोत्रांतरायाः॥४॥पंच

शल्योव्रती॥१८॥ अगार्यनगारश्च॥१९॥ अणुव्रतोगारी॥२०॥ दिग्देशानर्थदंडविरतिसामा
यिकप्रोषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसंपन्नश्च॥२१॥
कीसल्लेखनांजोषिता॥२२॥ शंकाकांक्षाविचिकित्सान्यदृष्टिप्रशंसासंस्तवाःस
।चाराः॥२३॥ व्रतशीलेषुपंचपंचयथाक्रमं॥२४॥ बंधवधछेदातिभारारोपणान्नपान
:॥२५॥ मिथ्योपदेशरहोभ्याख्यानकूटलेखक्रियान्यासापहारसाकारमंत्रभेदाः॥२
स्तेनप्रयोगःतदाहृतदानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपक
:॥२७॥ परविवाहकरणेत्वरकापरिग्रहीतापरिग्रहीतागमनानंगक्रीडाकामतीव्राभि
निवेशाः॥२८॥ क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यभांडप्रमाणातिक्रमाः॥२
ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यंतराधानानि॥२०॥ आनयनप्रेष्यप्रयोगशब्दरूपानु

॥दशसूत्र॥
॥१२॥

हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्योविरतिर्व्रतं॥१॥देशसर्वतोणुमहती॥२॥तत्स्थैर्यार्थंभाव
नाःपंचपंच॥३॥वाङ्मनोगुप्तीर्यादाननिक्षेपणसमित्यालोकितपानभोजनानिपंच॥४॥क्रो
धलोभभीरुत्वहास्यप्रत्याख्यानान्यनुवीचीभाषणंचपंच॥५॥शून्यागारविमोचितावास
परोपरोधाकरणभैक्ष्यशुद्धिसधर्माविसंवादाःपंच॥६॥स्त्रीरागकथाश्रवणतन्मनोहरां
गनिरीक्षणपूर्वरतानुस्मरणवृष्येष्टरसस्वशरीरसंस्कारत्यागाःपंच॥७॥मनोज्ञामनोज्ञे
न्द्रियविषयरागद्वेषवर्जनानिपंच॥८॥हिंसादिष्विहामुत्रापायावद्यदर्शनं॥९॥दुःखमेव
वा॥१०॥मैत्रीप्रमोदकारुण्यमाध्यस्थानिचसत्वगुणाधिकक्लिश्यमानाविनयेषु॥११॥
जगत्कायस्वभावौवासंवेगवैराग्यार्थं॥१२॥प्रमत्तयोगात्प्राणव्यपरोपणंहिंसा॥१३॥अ
सदभिधानमनृतं॥१४॥अदत्तादानंस्तेयं॥१५॥मैथुनमब्रह्म॥१६॥मूर्छापरिग्रहः॥१७॥अनिः

त्रपरिणामश्चारित्रमोहस्य॥१४॥बह्वारंभपरिग्रहत्वंनारकस्यायुषः॥१५॥मायातैर्यग्योनस्य
१६॥अल्पारंभपरिग्रहत्वंमानुषस्य॥१७॥स्वभावमार्द्दवत्वंच॥१८॥निःशीलव्रतत्वंचसर्वेषां॥
१९॥सरागसंयमसंयमासंयमाकामनिर्ज्जराबालतपांसिदेवस्य॥२०॥सम्यक्त्वंच॥२१॥
विसंवादनंचाशुभस्यनाम्नः॥२२॥तद्विपरीतंशुभस्य॥२३॥दर्शनविशुद्धिर्विनयसंप
न्नताशीलव्रतेष्वनतीचारोभीक्ष्णज्ञानोपयोगसंवेगौशक्तितस्त्यागतपसीसाधुसमा
धिर्वैयावृत्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिर्मार्गप्र
भावनाप्रवचनवत्सलत्वमितितीर्थकरत्वस्य॥२४॥परात्मनिंदाप्रसंसेसदसद्गुणेच्छादनो
द्भावनेचनीचैर्गोत्रस्य॥२५॥तद्विपर्य्ययोनीचैर्वृत्त्यनुत्सेकौचोत्तरस्य॥२६॥
॥२७॥इतितत्त्वार्थाधिगमेमोक्षशास्त्रेषष्ठमोध्यायः॥ ६ ॥

४१॥ तद्भावपरिणामः॥४२॥ इति तत्वार्थाधिगमे मोक्षशास्त्रे पंचमोध्यायः ॥ ५ ॥
कायवाङ्मनःकर्मयोगः॥१॥ स आश्रवः॥२॥ शुभः पुण्यस्याशुभः पापस्य॥३॥ सकषायाकषाययोः
सांपरायिकेर्यापथयोः॥४॥ इंद्रियकषायाव्रतक्रियाः पंचचतुःपंचपंचविंशतिसंख्याः पूर्वस्य
भेदाः॥५॥ तीव्रमंदज्ञाताज्ञातभावाधिकरणवीर्यविशेषेभ्यस्तद्विशेषः॥६॥ अधिकरणं जीव
जीवाः॥७॥ आद्यं संरंभसमारंभारंभयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्च
तुश्चैकशः॥८॥ निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परं॥९॥ तत्प्रदोषनिह्नव
मात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयोः॥१०॥ दुःखशोकतापाक्रंदनवधपरि
देवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य॥११॥ भूतव्रत्यनुकंपादानसरागसंयमादियोगः क्षांति
शौचमिति सद्वेद्यस्य॥१२॥ केवलिश्रुतसंघधर्मदेवावर्णवादो दर्शनमोहस्य॥१३॥ कषायोदया

भागादिषुजीवानां॥१५॥प्रदेशसंहारविसर्पाभ्यांप्रदीपवत्॥१६॥गतिस्थित्युपग्रहोधर्मा
र्मयोरुपकारः॥१७॥आकाशस्यावगाहः॥१८॥शरीरवाङ्मनःप्राणापानाःपुद्गलानां॥१९॥सु
खदुःखजीवितमरणोपग्रहाश्च॥२०॥परस्परोपग्रहोजीवानां॥२१॥वर्त्तनापरिणामक्रियाः
त्वापरत्वेचकालस्य॥२२॥स्पर्शरसगंधवर्णवंतःपुद्गलाः॥२३॥शब्दबंधसौक्ष्मस्थौ
स्थानभेदतमश्छायातपोद्योतवंतश्च॥२४॥अणवःस्कंधाश्च॥२५॥भेदसंघातेभ्यउत्पद्यन्ते॥
२६॥भेदादणुः॥२७॥भेदसंघाताभ्यांचाक्षुषः॥२८॥सद्द्रव्यलक्षणं॥२९॥उत्पादव्ययध्रौव्ययुक्तं
सत्॥३०॥तद्भावाव्ययंनित्यं॥३१॥अर्पितानर्पितसिद्धेः॥३२॥स्निग्धरूक्षत्वाद्बंधः॥३३॥
घन्यगुणानां॥३४॥गुणसाम्येसदृशानां॥३५॥द्व्यधिकादिगुणानांतु॥३६॥बंधेधिकौपारिणामि
कौचा॥३७॥गुणपर्य्ययवद्द्रव्यं॥३८॥कालश्च॥३९॥सोनंतसमयाः॥४०॥द्रव्याश्रयाः

॥१०॥

।दश सूत्र॥ र्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु सर्वार्थसिद्धौ च॥३१॥अपरापल्योपममधिकं
३२॥परतः परतः पूर्वापूर्वानंतराः॥३३॥नारकाणांच द्वितीयादिषु॥३४॥दशवर्षसहस्रा
णि प्रथमायां॥३५॥भवनेषुच॥३६॥व्यंतराणांच॥३७॥परापल्योपममधिकं॥३८॥ज्यो
णांच॥३९॥तदष्टभागोपरा॥४०॥लौकांतिकानामष्टौ सागरोपमाणि सर्वेषां॥४१॥इति
त्वार्थाधिगमे मोक्षशास्त्रे चतुर्थोध्यायः ॥ ४ ॥ अजीवकाया धर्म्माधर्म्माकाशपु
द्गला द्रव्याणि॥२॥जीवाश्च॥३॥नित्यावस्थितान्यरूपाणि॥४॥रूपिणः पुद्गलाः॥५॥आ
काशादेकद्रव्याणि॥६॥निःक्रियाणिच॥७॥असंख्येयाः प्रदेशाः धर्म्माधर्म्मैकजीवानां॥
॥८॥आकाशस्यानंताः॥९॥संख्येयासंख्येयाश्च पुद्गलानां॥१०॥नाणोः॥११॥लोकाकाशे
।१२॥धर्म्माधर्म्मयोः कृत्स्ने॥१३॥एकप्रदेशादिषु भाज्यः पुद्गलानां॥१४॥

॥१७॥ तपर्युपरि ॥१८॥ सौधर्मैशानसानत्कुमारमाहेंद्रब्रह्मब्रह्मोत्तरलांतवकापिष्टसुक्र
महाशुक्रसतारसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसुग्रैवेयकेषुविजयवैजयं
तजयंतापराजितेषुसर्वार्थसिद्धौच ॥१९॥ स्थितिप्रभावसुखद्युतिलेश्याविशुद्धींद्रियाव
धिविषयतोधिकाः ॥२०॥ गतिशरीरपरिग्रहाभिमानतोहीनाः ॥२१॥ पीतपद्मशुक्लले
द्वित्रिशेषेषु ॥२२॥ प्राग्ग्रैवेयकेभ्यःकल्पाः ब्रह्मलोकालयालौकांतिकाः ॥२३॥ सारस्वतादि
त्यवह्न्यरुणगर्दतोयतुषिताव्याबाधारिष्टाश्च ॥२४॥ विजयादिषुद्विचरमाः ॥२५॥ औपपा
दिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥२६॥ स्थितिरसुरनागसुपर्णद्वीपशेषाणांसागरोपम
त्रिपल्योपमार्द्धहीनमिताः ॥२७॥ सौधर्मैशानयोःसागरोपमेधिके ॥२८॥ सनत्कु
न्द्रयोःसप्त ॥२९॥ त्रिसप्तनवैकादशत्रयोदशपंचदशभिरधिकानितु ॥३०॥ आरणाच्युता

स्थितिपरावरे त्रिपल्योपमान्तर्मुहूर्ते ॥३८॥ तिर्यग्योनिजानां च ॥३९॥
देवाश्चतुर्णिकायाः ॥१॥ आदितस्त्रिषु पीतान्तलेश्याः ॥२॥ दशाष्टपं
चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ॥३॥ इन्द्रसामानिकत्रायस्त्रिंशत्पारिषदात्मरक्षलो
कपालानीकप्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः ॥४॥ त्रायस्त्रिंशल्लोकपालवर्ज्या व्यन्तरज्यो
तिष्काः ॥५॥ पूर्वयोर्द्वीन्द्राः ॥६॥ कायप्रवीचारा आ ऐशानात् ॥७॥ शेषाः स्पर्शरूपशब्दमनःप्रवी
चाराः ॥८॥ परेऽप्रवीचाराः ॥९॥ भवनवासिनोऽसुरनागविद्युत्सुपर्णाग्निवातस्तनितोदधिद्वीप
दिक्कुमाराः ॥१०॥ व्यन्तराः किन्नरकिम्पुरुषमहोरगगन्धर्वयक्षराक्षसभूतपिशाचाः ॥११॥ ज्योति
ष्काः सूर्याचन्द्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च ॥१२॥ मेरुप्रदक्षिणा नित्यगतयो नृलोके
॥१३॥ तत्कृतः कालविभागः ॥१४॥ बहिरवस्थिताः ॥१५॥ वैमानिकाः ॥१६॥ कल्पोपपन्नाः कल्पातीता

सिंधरोहिद्रोहितास्याहरिद्धरिकांतासीतासीतोदानारीनरकांतासुवर्णरूप्यकूलारक्तार-
दाः सरितस्तन्मध्यगाः॥२०॥द्वयोर्द्वयोःपूर्वाःपूर्वगाः॥२१॥शेषास्त्वपरगाः॥२२॥चतुर्द
सहस्रपरिवृताः गंगासिंध्वादयोनद्यः॥२३॥भरतःषड्विंशतिपंचयोजनशतविस्तारःषट्चैक
विंशतिभागायोजनस्य॥२४॥तद्द्विगुणद्विगुणविस्तारावर्षधरवर्षाविदेहान्ताः॥२५॥उ
णतुल्याः॥२६॥भरतैरावतयोर्वृद्धिह्रासौषट्समयाभ्यामुत्सर्पिण्यवसर्पिणीभ्यां॥२
७॥ताभ्यामपराभूमयोवस्थिताः॥२८॥एकद्वित्रिपल्योपमस्थितयोहैमवतकहारिवर्षकदैवकु
रवकाः॥२९॥तथोत्तराः॥३०॥विदेहेषुसंख्येयकालाः॥३१॥भरतस्यविष्कंभोजंबूद्वी
पनवतिशतभागः॥३२॥द्विर्धातकीखंडे॥३३॥पुष्करार्धेच॥३४॥प्राग्मानुषोत्तरान्मनुष्याः॥३५
आर्याम्लेच्छाश्च॥३६॥भरतैरावतविदेहाःकर्म्मभूमयोन्यत्रदेवकुरूत्तरकुरुभ्यः॥३७॥

र्थ्याः॥५॥ तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरोपमाः सत्त्वानां परा स्थितिः
॥६॥ जंबूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः॥७॥ द्विर्द्विर्विष्कंभाः पूर्वपूर्वपरिक्षेपिणो व
लयाकृतयः॥८॥ तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कंभो जंबूद्वीपः॥९॥ भरतहैमव
तहरिविदेहरम्यकहैरावतवर्षाः क्षेत्राणि॥१०॥ तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्नि
षधनीलरुक्मिशिखरिणो वर्षधरपर्वताः॥११॥ हेमार्जुनतपनीयवैडूर्यरजतहेममयाः॥१२॥ म
णिविचित्रपार्श्वा उपरि मूले च तुल्यविस्ताराः॥१३॥ पद्ममहापद्मतिगिंछकेशरिमहापुंडरीकपुंड
रीका ह्रदास्तेषामुपरि॥१४॥ प्रथमो योजनसहस्रायामस्तदर्द्धविष्कंभो ह्रदः॥१५॥ दशयोजनावगा
हः॥१६॥ तन्मध्ये योजनं पुष्करं॥१७॥ तद्द्विगुणद्विगुणा ह्रदाः पुष्कराणि च॥१८॥ तन्निवासिन्यो
देव्यः श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितयः ससामानिकपरिषत्काः॥१९॥ गंगा

थ

र्म॥३७॥प्रदेशतोऽसंख्येयगुणं प्राक्तैजसात्॥३८॥अनन्तगुणे परे॥३९॥अप्रतिघाते॥४०॥
धेच॥४१॥सर्वस्य॥४२॥तदादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः॥४३॥निरुपभोगमन्त्यं॥४४॥गर्भ
सम्मूर्छनजमाद्यं॥४५॥औपपादिकं वैक्रियिकं॥४६॥लब्धिप्रत्ययं च॥४७॥तैजसमपि॥४८॥
शुभं विशुद्धमव्याघाति चाहारकं प्रमत्तसंयतस्यैव॥४९॥नारकसम्मूर्छिनो नपुंसकानि॥५०॥न देवाः॥५१॥
स्त्रिवेदाः॥५२॥औपपादिकचरमोत्तमदेहाऽसंख्येयवर्षायुषोऽनपवर्त्यायुषः॥५३॥इति त
त्त्वार्थाधिगमे मोक्षशास्त्रे द्वितीयोऽध्यायः॥ २ ॥ रत्नशर्कराबालुकापंकधूमतमो
महातमःप्रभाभूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताधोऽधः॥१॥तासु त्रिंशत्पंचविंशतिपंचदश
दशत्रिपंचोनैकनरकशतसहस्राणि पंच चैव यथाक्रमं॥२॥नारका नित्याशुभतरलेश्यापरि
मदेहवेदनाविक्रियाः॥३॥परस्परोदीरितदुःखाः॥४॥संक्लिष्टासुरोदीरितदुःखाश्च प्राक्चतु

नस्का॥११॥संसारिणस्त्रसस्थावरा॥१२॥पृथिव्यप्तेजोवायुवनस्पतयःस्थावराः॥१३॥द्वीन्द्रि
यादयस्त्रसाः॥१४॥पंचेन्द्रियाणि॥१५॥द्विविधानि॥१६॥निर्वृत्युपकरणे द्रव्येन्द्रियं॥१७॥लब्ध्युपयो
गौ भावेन्द्रियं॥१८॥स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि॥१९॥स्पर्शरसगंधवर्णशब्दास्तदर्थाः
॥२०॥श्रुतमनिंद्रियस्य॥२१॥वनस्पत्यंतानामेकं॥२२॥कृमिपिपीलकाभ्रमरमनुष्यादीनामे
कैकवृद्धानि॥२३॥संज्ञिनःसमनस्काः॥२४॥विग्रहगतौकर्मयोगः॥२५॥अनुश्रेणिगतिः॥२६॥
अविग्रहाजीवस्य॥२७॥विग्रहवतीचसंसारिणःप्राकचतुर्भ्यः॥एकसमयाविग्रहाः॥२९॥एकं
द्वौत्रीन्वानाहारकः॥३०॥सन्मूर्छनगर्भोपपादाजन्मः॥३१॥सचित्तशीतसंवृत्तासेतरामिश्र
श्चैकस्तद्योनयः॥३२॥जरायुजांडजपोतानांगर्भः॥३३॥देवनारकाणामुपपादः॥३४॥शेषा
णांसन्मुर्छनं॥३५॥औदारिकवैक्रियकाहारकतैजसकार्म्मणानिशरीराणि॥३६॥परंपरंसू

निभाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः॥३१॥ मतिश्रुतावधयो विपर्ययश्च॥३२॥ सदसतोर्वि
च्छोपलब्धेरुन्मत्तवत्॥३३॥ नैगमसंग्रहव्यवहारर्जुसूत्रसमभिरूढैवंभूता नयाः
३४॥ ज्ञानदर्शनयोस्तत्त्वं नयानां चैव लक्षणं॥ ज्ञानस्य च प्रमाणत्वमध्यायेऽस्मिन्निरूपितं॥३५
॥इति तत्त्वार्थाधिगमे मोक्षशास्त्रे प्रथमोऽध्यायः॥ १ ॥ औपशमिकक्षायिकौ भावौ
मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च॥१॥ द्विनवाष्टादशैकविंशतित्रिभेदा
॥२॥ सम्यक्त्वचारित्रे॥३॥ ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च॥४॥ ज्ञानाज्ञानदर्श
नलब्धयश्चतुस्त्रित्रिपंचभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च॥५॥ गतिकषायलिंगमि
र्शनाज्ञानासंयतासिद्धलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः॥६॥ जीवभव्याभव्यत्वा
नि च॥७॥ उपयोगो लक्षणं॥८॥ स द्विविधोऽष्टचतुर्भेदः॥९॥ संसारिणो मुक्ताश्च॥१०॥

साधनाधिकरणस्थितिविधानतः॥८॥सत्संख्याक्षेत्रस्पर्शनकालांतरभावाल्पबहुत्वैश्च॥
९॥मतिश्रुतावधिमनःपर्य्ययकेवलानिज्ञानं॥१०॥तत्प्रमाणे॥११॥आद्येपरोक्षं॥१२॥प्रत्यक्षम
न्यत्॥१३॥मतिस्मृतिसंज्ञाचिंताभिनिबोधइत्यनर्थांतरं॥१४॥तदिंद्रियानिंद्रियनिमित्तं॥१५
॥अवग्रहेहावायधारणाः॥१६॥बहुबहुविधक्षिप्रानिसृतानुक्तध्रुवाणांसेतराणां॥१७॥अ
र्थस्य॥१८॥व्यंजनस्यावग्रहः॥१९॥नचक्षुरनिंद्रियाभ्यां॥२०॥श्रुतंमतिपूर्वंद्व्यनेकद्वादशभे
दं॥२१॥भवप्रत्ययोवधिर्देवनारकाणां॥२२॥क्षयोपशमनिमित्तःषड्विकल्पःशेषाणां॥२३॥
ऋजुविपुलमतिमनःपर्य्ययः॥२४॥विशुद्ध्यप्रतिपाताभ्यांतद्विशेषः॥२५॥विशुद्धिक्षेत्रस्वा
मिविषयेभ्योवधिमनःपर्य्यययोः॥२६॥मतिश्रुतयोर्निबंधोद्रव्येष्वसर्वपर्य्यायेषु॥२७॥रूपि
ष्ववधेः॥२८॥तदनंतभागेमनःपर्य्ययस्य॥२९॥सर्वद्रव्यपर्य्यायेषुकेवलस्य॥३०॥एकादी

॥ॐ नमः सिद्धेभ्यः॥ अथ दशाध्यायसूत्र लिख्यते॥ त्रैकाल्यं द्रव्यषट्कं नवपदसहितं
कायलेश्याः॥ पंचान्ये चास्तिकाया व्रतसमितिगतिज्ञानचारित्रभेदाः॥ इत्येतन्मोक्षमूलं
त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः॥ प्रत्येति श्रद्दधाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः॥१
गाथा॥ सिद्धजयप्पसिद्धे चउविहआराहणाफलं पत्ते॥ वंदित्ता अरिहंते वोच्छं
कमसो॥२॥ उज्जोवणमुज्जवणं णिव्वाहणं साहणं च णिच्छरणं॥ दंसणणाणचरि
णाभणिया॥३॥ इति स्वाध्यायपाठः॥ श्लोक॥ मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृतां॥
ज्ञातारं विश्वतत्त्वानां वंदे तद्गुणलब्धये॥१॥ सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः॥२॥ तत्त्वार्थ
श्रद्धानं सम्यग्दर्शनं॥३॥ तन्निसर्गादधिगमाद्वा॥४॥ जीवाजीवास्रवबंधसंवरनिर्जरामोक्षा
स्तत्त्वं॥५॥ नामस्थापनाद्रव्यभावतस्तन्न्यासः॥६॥ प्रमाणनयैरधिगमः॥७॥ निर्देशस्वामि.

[illegible] स्वयंभुवेनमस्तुभ्यमुत्पाद्यात्मानमात्मनि
स्वात्मनैवतथोद्भूतवृत्तयेऽचिंत्यवृत्तये॥१॥नमस्तेजगतांपत्येलक्ष्मीभर्त्रेनमोस्तुतेविदां
वरनमस्तुभ्यंनमस्तेवदतांवर॥२॥कामशत्रुहणंदेवमामनंतिमनीषिणः त्वामानमत्सु
रेण्मौलिभामालाभ्यर्चितक्रमं॥३॥ध्यानद्रुघणनिर्भिन्नघनघातिमहातरुः॥अनंत
भवसंतानजयादासीरनंतजित्॥४॥त्रैलोक्यनिर्जयावाप्तदुर्दर्पमतिदुर्जयंमृत्युरा
जंविजित्यासीज्जिनमृत्युंजयोभवान्॥५॥विधूताशेषसंसारबंधनोभव्यबांधवस्त्रिपु
रिस्त्वमीशोसिजन्ममृत्युजरांतकृत्॥६॥त्रिकालविजयाशेषतत्त्वभेदात्त्रिधोत्थितंके
वलाख्यंदधच्चक्षुस्त्रिनेत्रोसित्वमीशितः॥७॥त्वामंधकांतकंप्राहुर्मोहांधासुरमर्द्दनात्
अर्द्धंतेनारयोयस्मादर्द्धनारीश्वरोस्यतः॥८॥शिवःशिवपदाध्यासाद्दुरितारिहरोहरः

करःकृतस्त्वंलोकेशांनवस्त्वंनमस्तुते॥९॥ऋषभोसिजगज्ज्येष्ठःपुरुःपुरुगुणोदयैःना
भेयोनाभिसंभूतेरिक्ष्वाकुकुलनंदनः॥१०॥त्वमेकःपुरुषस्कंधस्त्वंद्वेलोकस्यलोचने॥
त्वंत्रिधाबुद्धसन्मार्गस्त्रिज्ञस्त्रिज्ञानधारकः॥११॥चतुःशरणमांगल्यमूर्तिस्त्वंचतुरस्रधीः॥
पंचब्रह्ममयोदेवपावनस्त्वंपुनीहिमां॥१२॥स्वर्गावतरणेतुभ्यंसद्योजातात्मनेनमः॥
जन्माभिषेकवामायवामदेवनमोस्तुते॥१३॥पुरस्तत्पुरुषत्वेनविमुक्तिपदभागिनेनम
स्तत्पुरुषावस्थांभाविनींतेद्यबिभ्रते॥१४॥सन्निःक्रांतावघोरायपरंप्रशममीयुषे॥केव
लज्ञानसंसिद्धावीशानायनमोस्तुते॥१५॥ज्ञानावरणनिर्ह्रासान्नमस्तेऽनंतचक्षुषे॥दर्श
नावरणोच्छेदान्नमस्तेविश्वदृश्वने॥१६॥नमोदर्शनमोहघ्नेक्षायिकामलदृष्टये॥नमश्चा
रित्रमोहघ्नेविरागायमहौजसे॥१७॥नमस्तेऽनंतवीर्यायनमोऽनंतसुखात्मने॥नमस्ते

नंतलोकायलोकालोकविलोकिने।१८।नमस्तेनंतदानायनमस्तेनंतलब्धये।न
मस्तेनंतभोगायनमोनंतोपभोगिने।१९।नमःपरमयोगायनमस्तुभ्यमयोनये।न
मःपरमपूतायनमस्तेपरमर्षये।२०।नमःपरमविद्यायनमःपरमतच्छिदे।नमः
परमतत्वायनमस्तेपरमात्मने।२१।नमःपरमरूपायनमःपरमतेजसे।नमःपर
ममार्गायनमस्तेपरमेष्टिने।२२।परमर्द्धिजुषेधामपरमज्योतिषेनमः।नमःपारेतम
:प्राप्तधाम्नेपरतरात्मने।२३।नमःक्षीणकलंकायक्षीणबंधनमोस्तुते।नमस्तेक्ष १
णमोहायक्षीणदोषायतेनमः।२४।नमःसुगतयेतुभ्यंशोभनांगतिमीयुषे।नमस्ते
तींद्रियज्ञानसुखायानिंद्रियात्मने।२५।कायबंधननिर्मोक्षादकायायनमोस्तुते॥
नमस्तुभ्यमयोगाययोगिनामधियोगिने।२६।अवेदायनमस्तुभ्यमकषायायतेनम

नमः परमयोगींद्रवंदितांघ्रिद्वयाय ते।२७। नमः परमविज्ञान नमः परमसंयमा
मः परमदृग्दृष्टपरमार्थाय तायिने।२८। नमस्तुभ्यमलेश्याय शुक्ललेश्यांशकस्पृशे।
नमो भव्येतरावस्थाव्यतीताय विमोक्षिणे।२९। संज्ञ्यसंज्ञिद्वयावस्थाव्यतिरिक्तामला
त्मने। नमस्ते वीतसंज्ञाय नमः क्षायिकदृष्टये।३०। अनाहाराय तृप्ताय नमः परमभा
जुषे। अतीताशेषदोषाय भवाब्धेः पारमीयुषे।३१। अजराय नमस्तुभ्यं नमस्ते स्तादज
न्मने। अमृत्यवे नमस्तुभ्यमचलायाक्षरात्मने।३२। अलमास्तां गुणस्तोत्रमनंतास्ता
वका गुणाः। त्वां नामस्मृतिमात्रेण पर्युपासिसिषामहे।३३। प्रसिद्धाष्टसहस्रेद्धलक्षणं
त्वां गिरां पतिं। नाम्नामष्टसहस्रेण तोष्टुमोऽभीष्टसिद्धये।३४। इति स्तुतिः। श्रीमान्स्व
यंभूर्वृषभः शंभवः शंभुरात्मभूः स्वयंप्रभः प्रभुर्भोक्ता विश्वभूरपुनर्भवः।१। विश्वात्मा

श्री

विश्वलोकेशो विश्वतनुर्वसुरस्तरः । विश्वविद्विश्वविद्येशो विश्वयोनिरनश्वरः ॥३६॥ वि
श्वदृश्वा विभुर्धाता विश्वेशो विश्वलोचनः । विश्वव्यापी विधुर्वेधाः शाश्वतो विश्वतोमु
खः ॥३७॥ विश्वकर्मा जगज्ज्येष्ठो विश्वमूर्तिर्जिनेश्वरः । विश्वदृग्विश्वभूतेशो विश्वज्यो
तिरनीश्वरः ॥३८॥ जिनो जिष्णुरमेयात्मा विश्वरीशो जगत्पतिः । अनन्तजिदचिन्त्यात्मा भ
व्यबंधुरबंधनः ॥३९॥ युगादिपुरुषो ब्रह्मा पंचब्रह्ममयः शिवः । परः परतरः सूक्ष्मः पर
मेष्ठी सनातनः ॥४०॥ स्वयंज्योतिरजोजन्मा ब्रह्मयोनिरयोनिजः । मोहारिर्विजयी जे
ता धर्मचक्री दयाध्वजः ॥४१॥ प्रशान्तारिरनन्तात्मा योगी योगीश्वरार्चितः । ब्रह्मविद्ब्रह्म
तत्त्वज्ञो ब्रह्मोद्याविद्यतीश्वरः ॥४२॥ शुद्धो बुद्धः प्रबुद्धात्मा सिद्धार्थः सिद्धशासनः । सिद्धः सि
द्धान्तविद्ध्येयः सिद्धसाध्यो जगद्धितः ॥४३॥ सहिष्णुरच्युतोऽनन्तः प्रभविष्णुर्भवोद्भवः । प्रभू

ष्णुरज्ञेयज्योत्याजिष्णुर्धीश्वरोऽमयः ॥४४॥ विभावसुरसंभूष्णुः स्वयंभूष्णुः पुरातनः ॥ पर
मात्मा परंज्योतिस्त्रिजगत्परमेश्वरः ॥४५॥ इति श्रीमच्छतम् ॥१॥ दिव्यभाषापतिर्दिव्यः पू
तवाक्पूतशासनः ॥ पूतात्मा परमज्योतिर्धर्माध्यक्षो दमेश्वरः ॥४६॥ श्रीपतिर्भगवा
नर्हन्नरजा विरजाः शुचिः ॥ तीर्थकृत्केवलीशानः पूजार्हः स्नातकोऽमलः ॥४७॥ अनन्तदी
प्तिर्ज्ञानात्मा स्वयंबुद्धः प्रजापतिः ॥ मुक्तः शक्तो निराबाधो निःकलो भुवनेश्वरः ॥४८॥
निरंजनो जगज्ज्योतिर्निरुक्तोक्तिर्निरामयः ॥ अचलस्थितिरक्षोभ्यः कूटस्थः स्थाणुर
क्षयः ॥४९॥ अग्रणीर्ग्रामणीर्नेता प्रणेता न्यायशास्त्रकृत् ॥ शास्ता धर्मपतिर्धर्म्यो धर्मा
त्मा धर्मतीर्थकृत् ॥५०॥ वृषध्वजो वृषाधीशो वृषकेतुर्वृषायुधः ॥ वृषो वृषपतिर्भर्ता वृष
भांको वृषोद्भवः ॥५१॥ हिरण्यनाभिर्भूतात्मा भूतभृद्भूतभावनः ॥ प्रभवो विभवो भास्वान्

नमोनाभेयनमोनमः॥५२॥हिरण्यगर्भः श्रीगर्भः प्रभूतविभवोभवः स्वयंप्रभुः प्रभू
तात्माभूतनाथोजगत्प्रभुः॥५३॥सर्वादिः सर्वदृक्सार्वः सर्वज्ञः सर्वदर्शनः सर्वा
त्मासर्वलोकेशः सर्ववित्सर्वलोकजित्॥५४॥सुगतिः सुश्रुतः सुश्रुत्सुवाक्सूरि
र्बहुश्रुतः॥विश्रुतोविश्वतःपादोविश्वशीर्षः शुचिश्रवाः॥५५॥सहस्रशीर्षः क्षेत्रज्ञः
सहस्राक्षः सहस्रपात्भूतभव्यभवद्भर्ताविश्वविद्यामहेश्वरः॥५६॥इतिदिव्यशत
म॥४॥स्थविष्ठः स्थविरोज्येष्ठः प्रष्ठःप्रेष्ठोवरिष्ठधीः स्थेष्ठोगरिष्ठोबंहिष्ठः श्रेष्ठोऽणिष्ठोगरि
ष्ठगीः॥५७॥विश्वभृद्विश्वसृड्विश्वेट्विश्वभुग्विश्वनायकः॥विश्वाशीविश्वरूपात्माविश्वजि
द्विजितान्तकः॥५८॥विभवोविभयोवीरोविशोकोविजरोजरन्॥विरागोविरतोऽसंगो
विविक्तोवीतमत्सरः॥५९॥विनेयजनताबंधुर्विलीनाशेषकल्मषः॥वियोगोयोगवि

दान्विघ्नमाप्नुविधिः सुधीः ॥६०॥ सोऽतिनाकृत्पृथिवीमूर्त्तिः शान्तिनाकृत्सलिलात्मक
ः वायुमूर्त्तिरसंगात्मा वह्निमूर्त्तिरधर्म्मधृक् ॥६१॥ सुयज्वा यजमानात्मा सुत्वा सूत्रामभू
त्रितः ऋत्विग्यज्ञपतिर्योयज्ञांगममृतं हविः ॥६२॥ सोममूर्त्तिरमूर्त्तात्मा निर्लेपोऽति
र्मलोऽचलः सोममूर्त्तिः सुसौम्यात्मा सूर्यमूर्त्तिर्महातपनः ॥६३॥ मंत्रविन्मंत्रकृण्मंत्रीमं
त्रमूर्त्तिरनंतगः स्वतेत्रस्तेत्रकृत्स्तेनः कृतान्तान्तः कृतान्तकृत् ॥६४॥ कृती कृतार्थः सा
त्त्वकृतः कृतकृत्यः कृतक्रतुः नित्यो मृत्युंजयो मृत्युरमृतात्मा मृतोद्भवः ॥६५॥ ब्रह्मवि
द्ब्रह्म परं ब्रह्म ब्रह्मात्मा ब्रह्मसंभवः महाब्रह्मपतिर्ब्रह्मेट् महाब्रह्मपदेश्वरः ॥६६॥ सुप्र
सन्नः प्रसन्नात्मा ज्ञानधर्म्मदमप्रभुः प्रशमात्मा प्रशान्तात्मा पुराणः पुरुषोत्तमः ॥६७॥
इतिस्थविश्रामनम् ॥ महाशोकघ्नोऽशोकः कः सन्तापघ्नविष्टरः पर्येशः पञ्चसंस्तुतिः

पद्मनाभिरनुत्तरः ॥६९॥ पद्मयोनिर्जगद्योनिरित्यः स्तुत्यः स्तुतीश्वरः । स्तवनार्हो हृषीके-
शो जितजेयः कृतक्रियः ॥ गणाधिपो गणज्येष्ठो गण्यः पुण्यो गणाग्रणीर्गु-
णाकरो गुणाम्भोधिर्गुणज्ञो गुणनायकः ॥७०॥ गुणादरी गुणोच्छेदी निर्गुणः पु-
ः शरण्यः पुण्यवाक्पूतो वरेण्यः पुण्यनायकः ॥७१॥ अगण्यः पुण्यधीर्गण्यः पुण्यकृ-
त्पुण्यशासनः ॥ धर्मारामो गुणग्रामः पुण्यापुण्यनिरोधकः ॥७२॥ पापापेतो विपापा-
त्मा विपाप्मा वीतकल्मषः ॥ निर्द्वन्द्वो निर्मदः शान्तो निर्मोहो निरुपद्रवः ॥७३॥
मेषो निराहारो निष्क्रियो निरुपप्लवः ॥ निःकलंको निरस्तैना निर्धूतागा निरास्रवः
॥७४॥ विशालो विपुलज्योतिरतुलोऽचिन्त्यवैभवः । सुसंवृतः सुगुप्तात्मा सुबुत्सुनयतत्त्व-
वित् ॥७५॥ एकविद्यो महाविद्यो मुनिः परिवृढः पतिः । धीशो

नाविद्धनोमकः॥७६॥पितापितामहः पाता पवित्रः पावनो गतिः त्राता भिषग्वरो
वर्यो वरदः परमः पुमान्॥७७॥कविः पुराणपुरुषो वर्षीयानृषभः पुरुः प्रतिष्ठाप्र
सवो हेतुर्भुवनैकपितामहः॥७८॥इति महाशतकम्॥श्रीवृक्षलक्षणः श्लक्ष्णो लक्षण्यः
शुभलक्षणः॥निरक्षः पुण्डरीकाक्षः पुष्कलः पुष्करेक्षणः॥७९॥सिद्धिदः सिद्धसंकल्पः
सिद्धात्मा सिद्धसाधनः॥बुद्धबोध्यो महाबोधिर्वर्द्धमानो महर्द्धिकः॥८०॥वेदाङ्गो वेदवि
द्वेद्यो जातरूपो विदांवरः॥वेदवेद्यः स्वसंवेद्यो विवेदो वदतांवरः॥८१॥अनादिनिधने १
अव्यक्तो व्यक्तवाग्व्यक्तशासनः॥युगादिकृद्युगाधारो युगादिर्जगदादिजः॥८२॥अतीन्द्रो
ऽतीन्द्रियो धीन्द्रो महेन्द्रोऽतीन्द्रियार्थदृक्॥अनिन्द्रियोऽहमिन्द्रार्च्यो महेन्द्रमहितो महान्॥८३॥
उद्भवः कारणं कर्ता पारगो भवतारकः॥अग्राह्यो गहनं गुह्यं परार्घ्यः परमेश्वरः॥८४॥

कोमंतामहामंत्रोमहायतिः। महानादोमहाघोषोमहेज्योमहसांपतिः॥९३॥महाध्व
रंधरोधुर्य्योमहौदार्य्योमहिष्ठवाक्। महात्मामहसांधाममहर्षिर्महितोदयः॥९४॥म
हाक्लेशांकुशःशूरोमहाभूतपतिर्गुरुः। महापराक्रमोनंतोमहाक्रोधरिपुर्वशी॥
महाभवाब्धिसंतारीमहामोहाद्रिसूदनः। महागुणाकरःक्षांतोमहायोगीश्वरःशमी
॥९६॥महाध्यानपतिर्ध्यातमहाधर्म्मामहाव्रतः। महाकर्म्मारिहात्मज्ञोमहादेवोमहे
शिता॥९७॥सर्वक्लेशापहःसाधुःसर्वदोषहरोहरः। असंख्येयोप्रमेयात्माशमात्माप्रश
माकरः॥९८॥सर्वयोगीश्वरोचिंत्यःश्रुतात्माविष्टरश्रवाः। दांतात्मादमतीर्थेशोयोगात्म
ज्ञानसर्वगः॥९९॥प्रधानमात्माप्रकृतिःपरमःपरमोदयः। प्रक्षीणबंधःकामारिःक्षेम
कृत्क्षेमशासनः॥१००॥प्रणवःप्रणयःप्राणःप्राणदःप्राणतेश्वरः। प्रमाणंप्रणिधिर्दक्षे

दन्तिनिपक्षगुरध्वरः॥२०१॥ अमेयोऽनन्तमोऽनन्तो वेद्योऽनिन्द्योऽनिन्दनः कामदः कामदः
कामः कामधनुर्विजयः॥२॥ इति महामुनिज्ञातम्॥६॥ असंस्कृतः सुसंस्कारः शान्त
तो वैकृतानकृतः॥३॥ नकृतकालगुः कालश्चिन्तामणिरनीहः॥२०४॥ अक्षितोऽक्षि
तकामारिर्मितोमितज्ञासनः॥ जितक्रोधो जितामित्रो जितलोको जितान्तकः॥५
जितेन्द्रः परमानन्दो मुनीन्द्रोऽडुनिभाननः॥ महेन्द्रवन्द्यो योगीन्द्रो यतीन्द्रो नाभिनन्दनः॥
५॥ नाभेयो नाभिजो जातः सुव्रतो मनुरुत्तमः॥ अभेद्योऽनत्ययोऽनाश्वानधिकोऽधिगुरुः सु
गीः॥६॥ सुमेधा विक्रमी स्वामी दुराधर्षो निरुत्सुकः॥ विशिष्टः शिष्टभुक् शिष्टः प्रत्ययः
कामनोऽनघः॥७॥ क्षेमी क्षेमंकरोऽक्षय्यः क्षेमधर्मपतिः क्षमी॥ अग्राह्यो ज्ञाननिग्राह्यो
ध्यानगम्यो निरुत्तरः॥८॥ सुकृती धातुरिज्यार्हः सुनयश्चतुराननः॥ श्री[redacted]निवासश्च

हृष्टहृष्टः सर्वलोकातिगः पूज्यः सर्वलोकैकसारथिः ॥१५॥ पुराणः पुरुषः पूर्वः स्रष्टा पूर्वाग
विस्तरः ॥ आदिदेवः पुराणाद्यः पुरुदेवोऽधिदेवता ॥१६॥ युगमुख्यो युगज्येष्ठो युगादिस्थिति
देशकः ॥ कल्याणवर्णः कल्याणः कल्यः कल्याणलक्षणः ॥१७॥ कल्याणप्रकृतिर्दीप्रकल्याण
त्मा विकल्मषः ॥ विकलङ्कः कलातीतः कलिलघ्नः कलाधरः ॥१८॥ देवदेवो जगन्नाथो ज
गद्बन्धुर्जगद्विभुः ॥ जगद्धितैषी लोकज्ञः सर्वगो जगदग्रजः ॥१९॥ चराचरगुरुर्गोप्यो गूढात्मा १
गूढगोचरः ॥ सद्योजातः प्रकाशात्मा ज्वलज्ज्वलनसप्रभः ॥२०॥ आदित्यवर्णो भर्माभः सुप्र
भः कनकप्रभः ॥ सुवर्णवर्णो रुक्माभः सूर्यकोटिसमप्रभः ॥२१॥ तपनीयनिभस्तुङ्गो बाला
र्काभोऽनलप्रभः ॥ संध्याभ्रबभ्रुर्हेमाभस्तप्तचामीकरच्छविः ॥२२॥ निष्टप्तकनकच्छायः क
नत्काञ्चनसंनिभः ॥ हिरण्यवर्णः स्वर्णाभः शातकुम्भनिभप्रभः ॥२३॥ द्युम्नाभो जातरूपाभो

मज्ञांभूतद्युतिः सुधौतकलधौतश्रीः प्रदीप्तो हाटकद्युतिः ॥३५॥ शिष्टेष्टः पुष्टिदः पुष्टः
ष्टः स्पष्टाक्षरः क्षमः शत्रुघ्नोप्रतिघोमोघः प्रशास्ता शासिता स्वभूः ॥३६॥ शान्तिनिष्ठो मु
निज्येष्ठः शिवतातिः शिवप्रदः शान्तिदः शान्तिकृच्छान्तिः कान्तिमान्कामितप्रदः ॥३७॥ श्रे
योनिधिरधिष्ठानमप्रतिष्ठः प्रतिष्ठितः सुस्थिरः स्थावरः स्थाणुः प्रथीयान्प्रथितः
पृथुः ॥३८॥ इति त्रिकालज्ञानशतम् ॥७॥ दिग्वासा वातरसनो निर्ग्रन्थेशो दिगम्बरः निःकिंचने १
निराशंसो ज्ञानचक्षुरमोमुहः ॥३९॥ तेजोराशिरनन्तौजा ज्ञानाब्धिः शीलसागरः तेजोम
योमितज्योतिर्ज्योतिर्मूर्तिस्तमोपहः ॥४०॥ जगच्चूडामणिर्दीप्तः शंवान्विघ्नविनायकः
कलिघ्नः कर्मशत्रुघ्नो लोकालोकप्रकाशकः ॥४१॥ अनिद्रालुरतन्द्रालुर्जागरूकः प्रम
मयः लक्ष्मीपतिर्जगज्ज्योतिर्धर्मराजः प्रजाहितः ॥४२॥ मुमुक्षुर्बन्धमोक्षज्ञो जिताक्षो

धप

गंसोत्थानं तच्चतुष्टयं ५६ त्वं पंचब्रह्मतत्वात्मा पंचकल्याणनायकः षड्भेदभावतत्वज्ञस्त्वं
सप्तनयसंग्रहः ५७ दिव्याष्टगुणमूर्तिस्त्वं नवकेवललब्धिकः दशावतारनिर्धार्यो मां पाहि
परमेश्वरः ५८ युष्मन्नामावलीहृब्धविलसत्स्तोत्रमालया भवेतं वरिवस्यामः प्रसीदानुगृह्
णन ५९ इदं स्तोत्रमनुस्मृत्य पूतो भवति भाक्तिकः यः संपाठं पठत्येनं स स्यात्कल्याणभा
जनं ६० ततः सदेदं पुण्यार्थी पुमान् पठतु पुण्यधीः पौरंहूतीं श्रियं प्राप्तुं परमामभिला
षुकः ६१ स्तुत्वेति मघवा देवं चराचरजगद्गुरुं ततस्तीर्थविहारस्य व्यधात्प्रस्तावनामिमां
६२ भगवन्भव्यशस्यानां पापावग्रहशोषिणां धर्मामृतप्रसेकेन त्वमेधि शरणं विभो ६३

न्यसार्वोधिपत्रोद्ध दयाध्वजविराजितः धर्मचक्रमिदं सज्जं त्वज्जयोद्योगसाधनं ९४
निर्धूयमोहपृतनां मुक्तिमार्गोपरोधिनीं तवोपदेष्टुं सन्मार्गं कालोयं समुपस्थितः
इतिप्रबुद्धतत्वस्य स्वयंभर्तुर्जिगीषतः पुनरुक्ततरावाचः प्रादुरासन्नाकतोः ९६ तं
देवं त्रिदशाधिपार्चितपदं घातिक्षयानंतरं प्रोत्थानंतचतुष्टयं जिनमिमं भव्याब्जिनीनामि
नं मानस्तंभविलोकनानतजगन्मान्यंत्रिलोकीपतिं प्राप्तानंतचतुष्टयं जिनमिमं भक्त्या
ध्वं [illegible]दामहे ९७ इतिजिनसहस्रनामसंपूर्णम्

वाचकी सकलऋद्धिसंपदा लक्ष्मीलाभकरै प्रथमकाव्ययंत्रमंत्रकोफल हेमश्रे
नेंकुञ्ज्यो चक्केश्वरीदेवीश्राई राजानेंदृष्टांतकुञ्ज्यो इतिप्रथमकाव्ययंत्रमंत्रसंपूर्णम्
अथद्वितीयकाव्ययंत्रमंत्रविधिफललिख्यते यःसंस्तुतःसकलवाङ्मयतत्वबोधा
दुद्भूतबुद्धिपटुभिःसुरलोकनाथैः स्तोत्रैर्जगत्त्रितयचित्तहरैरुदारैः स्तोष्येकिलाह
तंप्रथमंजिनेंद्रं २ ऋद्धिः ॐह्रींणमोअर्हीजिणाणं मंत्र ॐह्रींश्रींक्लींब्लूंनमः काव्यमं
पिवातेंकुमतिदूरहोय अथयंत्रविधिः

तमन्मयः प्रशान्तरसशैलूषो भव्यपेटकनायकः ४३ मूलकर्ताखिलज्योतिर्मल
नकारणं आप्तो वागीश्वरः श्रेयान् मलघ्नो मूलकारणं श्रायसोक्तिर्निरुक्तवाक् ४४ प्र
ज्ञो मारजिद्विश्वभाववित् सुतनुस्तनुनिर्मुक्तः सुगतो हतदुर्नयः ४५ श्रीशः
श्रीश्रितपादाब्जो वीतभीरभयंकरः उत्सन्नदोषो निर्विघ्नो निश्चलो लोकवत्सलः ४
कोत्तरो लोकपतिर्लोकचक्षुरपारधीः धीरधीर्बुद्धसन्मार्गः शुद्धः सूनृतपूतवाक् ४७
पार मितः प्राज्ञो यतिर्नियमितेन्द्रियः भदंतो भद्रकृद्भद्रः कल्पवृक्षो वरप्रदः ४
समुन्मूलितकर्मारिः कर्मकाष्ठाशुशुक्षणिः कर्मण्यः कर्मठः प्रांशुर्हेयादेयविचक्षणः ४९

।।अथभक्तामरस्तोत्रयंत्रमंत्राधिकारलिख्यते।। भक्तामरप्रणतमौलिमणिप्रभाणा
तकंदलितपापतमोवितानं सम्यक्प्रणम्यजिनपादयुगंयुगादा वालंवनंभवजलेपत
तांजनानां १ ऋद्धिमंत्रः ॐ ह्रीं अर्हं णमो अरहंताणं णमोजिणाणं ह्रां ह्रीं ह्रूं ह्रौं ह्रः
असिआउसाअप्रतिचक्रेफट्विचक्रायझ्रौंझ्रौंस्वाहा मंत्रः ॐ ह्रां ह्रीं ह्रूं श्रीं क्लीं ब्लूं क्रौं
नमः एवंमंत्रध्यानेनसर्वसिद्धिः अथमंत्रप्रभावात्सकलोपद्रवनिवारणं यथा
ह्रांह्रींकारेणवेष्टितं पश्चात्ऋद्धिमंत्रेणवेष्टितं तदुपरिचतुर्दिक्षुचतुर्वत्वा
त ॐ ह्रींकारेणवेष्टितं सुखसौभाग्यवर्द्धनं अथफलविधि प्रथमकाव्यऋद्धिमंत्रपठ

भवतस्मरणाद्व्रजंति॥४४॥उद्भूतभीषणजलोदरभारभुग्नाः॥शोच्यांदशामुपगताश्च्युतजी
वताशाः॥त्वत्पादपंकजरजोमृतदिग्धदेहा॥मर्त्याभवंतिमकरध्वजतुल्यरूपाः॥४५॥आपा
दकंठमुरुशृंखलवेष्टितांगा॥गाढंबृहन्निगडकोटिनिघृष्टजंघा॥त्वन्नाममंत्रमनिशंमनु
जास्मरंतः॥सद्यःस्वयंविगतबंधभयाभवंति॥४६॥मत्तद्विपेंद्रमृगराजदवानलाहिसंग्रामवा
रिधिमहोदरबंधनोत्थं॥तस्याशुनाशमुपयातिभयंभियेव॥यस्तावकंस्तवमिमंमतिमान
धीते॥४७॥स्तोत्रस्रजंतवजिनेंद्रगुणैर्निबद्धां॥भक्त्यामयाविविधवर्णविचित्रपुष्पां॥धत्तेजि
नोयइहकंठगतामजस्रं॥तंमानतुंगमिवशासमुपैतिलक्ष्मीः॥४८॥इतिश्रीमानतुंगा
चार्यविरचितेश्रीभक्तामरस्तोत्रसंपूर्णम्॥ शुभम्॥

क्रमः क्रमगतं हरिणाधिपोपि॥ नाक्रामति क्रमयुगाचलसंश्रितं ते॥३९॥ कल्पांतकालप
वनोद्धतवह्निकल्पं॥ दावानलं ज्वलितमुज्वलमुत्फुलिंगं॥ विश्वं जिघत्सुमिव स
तं॥ त्वन्नामकीर्तिनजलं शमयत्यशेषं॥४०॥ रक्तेक्षणं समदकोकिलकंठनीलं॥ क्रोधो
द्धतं फणिनमुत्फणमापतंतं॥ आक्रामति क्रमयुगेन निरस्तशंकः॥ त्वन्नामनागदमनी हृ
द्यस्य पुंसः॥४१॥ वल्गत्तुरंगगजगर्जितभीमनाद॥ माजौ बलं बलवतामपि भूपतीनां॥
उद्यद्दिवाकरमयूखशिखापविद्धं॥ त्वत्कीर्तनात्तम इवाशु भिदामुपैति॥४२॥ कुंताग्रभि
न्नगजशोणितवारिवाह॥ वेगावतारतरणातुरयोधभीमे॥ युद्धे जयं विजितदुर्ज
॥ त्वत्पादपंकजवनाश्रयिणो लभंते॥४३॥ अंभोनिधौ क्षुभितभीषणनक्रचक्रे
पाठीनपीठभयदोल्वणवाडवाग्नौ॥ रंगत्तरंगशिखरस्थितयानपात्रा॥ स्त्रासं विहाय

मांततिर्व्वा॥३३॥शुंभत्प्रभावलयभूरिविभाविभोस्ते॥लोकत्रयेद्युतिमतांद्युतिमाक्षिपंती॥प्रोद्य
द्दिवाकरनिरंतरभूरिसंख्या॥दीप्त्याजयत्यपिनिशामपिसोमसौम्या॥३४॥स्वर्गापवर्गगममा
र्गविमार्गणेष्टः॥सद्धर्म्मतत्त्वकथनैकपटुस्त्रिलोक्याः॥दिव्यध्वनिर्भवतितेविशदार्थसर्व्वभा
षास्वभावपरिणामगुणैःप्रयोज्यः॥३५॥उन्निद्रहेमनवपंकजपुंजकांति॥पर्य्युल्लसन्नखम
यूखशिखाभिरामौ॥पादौपदानितवयत्रजिनेंद्रधत्तः॥पद्मानितत्रविबुधाःपरिकल्पयंति॥३६
इत्थंयथातिवविभूतिरभूज्जिनेंद्र धर्म्मोपदेशनविधौनतथापरस्य॥यादृक्प्रभादिनकृतःप्रह
तांधकारा॥तादृक्कुतोग्रहगणस्यविकाशिनोपि॥३७॥श्च्योतन्मदाविलविलोलकपोलमूल
मत्तभ्रमद्भ्रमरनादविवृद्धकोपं॥ऐरावताभमिभमुद्धतमापतंतं॥दृष्ट्वाभयंभवतिनोभवदा
श्रितानां॥३८॥भिन्नेभकुंभगलदुज्ज्वलशोणिताक्त॥मुक्ताफलप्रकरभूषितभूमिभाग॥ब

श्रितमुन्मयूख॥माभाति रूपममलं भवतो नितांतं॥स्पष्टोल्लसत्किरणमस्ततमो वितानं॥ बिंबं र
वपयोधरपार्श्ववर्ति॥२८॥सिंहासने मणिमयूखशिखाविचित्रे॥ विभ्राजते तव वपु कनका
बिंबं वियद्विलसदंशुलतावितानं॥तुंगोदयाद्रिशिरसीव सहस्ररश्मे॥२९॥कुंदावदातचल
चारु शोभं॥विभ्राजते तव वपुः कलधौत कांतं॥उद्यच्छशांकशुचिनिर्झरवारिधारा
टं सुरगिरेरिव शातकौंभम्॥३०॥ छत्रत्रयं तव विभाति शशांककांतं॥मुच्चैः स्थितं स्थगितभानु
करप्रतापं मुक्ताफलप्रकरजालविवृद्धशोभं॥प्रख्यापयस्त्रिजगतः परमेश्वरत्वं॥३१॥गंभी
ताररवपूरितदिग्विभाग॥स्त्रैलोक्यलोकशुभसंगमभूतिदक्ष॥सद्धर्मराजज
कः सन्॥ खे दुंदुभिर्ध्वनति ते यशशः प्रवादी॥३२॥मंदारसुंदरनमेरुसुपारिजात॥संता
नकादिकुसुमोत्करवृष्टिरुद्धा॥ गंधोदबिंदुशुभमंदमरुत्प्रपाता॥दिव्या दिवः पतति ते

।मर।।
।।

रश्मिं प्राचेवदिग्जनयतिस्फुरदंशुजालं॥२२॥ त्वामामनंतिमुनयः परमंपवित्र मादित्यव
र्णममलंतमसःपुरस्तात्॥ त्वामेवसम्यगुपलभ्यजयंतिमृत्युं॥नान्यःशिवःशिवपदस्यमुनींद्र
पंथा॥२३॥ त्वामव्ययंविभुमचिंत्यमसंख्यमाद्यं॥ ब्रह्माणमीश्वरमनंतमनंगकेतुं॥ योगीश्वरं
विदितयोगमनेकमेकं॥ ज्ञानंस्वरूपममलं प्रवदंतिसंतः॥ २४॥ बुद्धस्त्वमेवविबुधार्चित
बुद्धिबोधा॥ त्वंशंकरोसिभुवनत्रय शंकरत्वात्॥ धातासिधीरशिवमार्गविधेर्विधाना॥ व्यक्तं
त्वमेवभगवान्पुरुषोत्तमोसि॥ २५॥ तुभ्यंनमस्त्रिभुवनार्तिहरायनाथ॥ तुभ्यंनमःक्षिति
तलामलभूषणाय॥ तुभ्यंनमस्त्रिजगतःपरमेश्वराय॥ तुभ्यंनमोजिनभवोदधिशोषणा
य॥२६॥ कोविस्मयोत्रयदिनामगुणैरशेषै॥ स्त्वंसंश्रितोनिरवकाशतयामुनीश॥ दोषैरु
पात्तविबुधाश्रयजातगर्वैः॥ स्वप्नांतरेपिनकदाचिदपीक्षितोसि॥२७॥ उच्चैरशोकतरुसं

ऊगम्यः स्पष्टीकरोषिसहसायुगपज्जगंति॥नांभोधरोदरनिरुद्धमहाप्रभावः॥सूर्य्यातिशायि
हिमासिमुनींद्रलोके॥१७॥नित्योदयंदलितमोहमहांधकारं॥गम्यंनराहुवदनस्यनवारि
विभ्राजतेतवमुखाब्जमनल्पकांति॥विद्योतयज्जगदपूर्वशशांकबिंबं॥१८॥किंशर्वरीषु
शशिनान्हिविवस्वतावा॥युष्मन्मुखेंदुदलितेषुतमस्सुनाथ॥निष्पन्नशालिवनशालिनिजी
वलोके॥कार्य्यंकियज्जलधरैर्जलभारनम्रैः॥१९॥ज्ञानंयथात्वयिविभातिकृतावकाशं
६ रेहरिदिषुनायकेषु॥तेजोमहामणिषुयातियथामहत्वं॥नैवंतुकाचशकले
किरणाकुलेपि॥२०॥मन्येवरंहरिहरादयएवदृष्टा॥दृष्टेषुयेषुहृदयंत्वयितोषमेति
वीक्षतेनभवताभुवियेननान्यः कश्चिन्मनोहरतिनाथभवान्तरेपि॥२१॥स्त्रीणांशतानि
शतशोजनयंतिपुत्रान्॥नान्यासुतंत्वदुपमंजननीप्रसूता॥सर्वादिशोदधतिभानुसह

लनिधेरसितुंकइछेत्॥११॥ येःशांतरागरुचिभिःपरमाणुभिस्त्वं॥ निर्म्मापितस्त्रिभुवनै
कललामभूत॥ तावंतएवखलुतेप्यणवःपृथिव्यां॥ यत्तेसमानमपरंनहिरूपमस्ति॥१२॥
वक्रक्वतेसुरनरोरगनेत्रहारि॥ निःशेषनिर्जितजगत्रितयोपमानं॥ बिंबंकलंकमलिनं
क्वनिशाकरस्य॥ यद्वासरेभवतिपांडुपलाशकल्पं॥१३॥ संपूर्णमंडलशशांककलाकला
प शुभ्रागुणास्त्रिभुवनंतवलंघयंति॥ येसंश्रितास्त्रिजगदीश्वरनाथमेकं॥ कस्तान्निवारय
तिसंचरतोयथेष्टं॥१४॥ चित्रंकिमत्रयदितेत्रिदशांगनाभिः॥ नीतंमनागपिमनोनवि
कारमार्गं॥ कल्पांतकालमरुताचलिताचलेन॥ किंमंदराद्रिशिखरंचलितंकदाचित्॥
१५॥ निर्धूमवर्तिरपवर्जिततैलपूरः॥ कृत्स्नंजगत्त्रयमिदंप्रकटीकरोषि॥ गम्योनजातुम
रुतांचलिताचलानां॥ दीपोपरस्त्वमसिनाथजगत्प्रकाशः॥१६॥ नास्तंकदाचिदुपयासिनरा

खरी कुरुते बलान्मां यत्कोकिलः किल मधौ मधुरं विरौति॥ तच्चारुचूतकलिकानिकरैकहे
:॥६॥ त्वत्संस्तवेन भवसंततिसन्निबद्धं॥ पापं क्षणात्क्षयमुपैति शरीरभाजां॥ आ
क्रमलिनीलमशेषमाशु॥ सूर्यांशुभिन्नमिव शार्वरमंधकारं॥ ७॥ मत्वेति नाथ तव संस्तव
नं मयेदमारभ्यते तनुधियापि तव प्रभावात्॥ चेतो हरिष्यति सतां नलिनीदलेषु॥ मुक्ताफ
लद्युतिमुपैति ननूदबिंदुः॥ ८॥ आस्तां तव स्तवनमस्तसमस्तदोषं॥ त्वत्संकथापि जगतां
दुरितानि हंति॥ दूरे सहस्रकिरणः कुरुते प्रभैव॥ पद्माकरेषु जलजानि विकाशभांजि॥ ९॥
नात्यद्भुतं भुवनभूषण भूतनाथ॥ भूतैर्गुणैर्भुवि भवंतमभिष्टुवंतः॥ तुल्या भवंति भ
वतो ननु तेन किंवा॥ भूत्याश्रितं य इह नात्मसमं करोति॥ १०॥ दृष्ट्वा भवंतमनिमेषविलोकनीयं
नान्यत्र तोषमुपयाति जनस्य चक्षुः॥ पीत्वा पयः शशिकरद्युति दुग्धसिंधोः॥ क्षारं जलं ज

॥ॐनमः सिद्धेभ्यः॥ अथ भक्तामरस्तोत्र लिख्यते॥ भक्तामरप्रणत मौलिमणिप्रभाणा मुद्यो
तकं दलितपापतमोवितानं सम्यक्प्रणम्य जिनपादयुगं युगादा वालंवनंभवजलेपत
तां जनानां १ यःसंस्तुतः सकलवाङ्मयतत्वबोधा दुद्भूतबुद्धिपटुभिः सुरलोकनाथैः
स्तोत्रैर्जगत् त्रितयचित्तहरैरुदारैः स्तोष्ये किलाहमपितं प्रथमंजिनेंद्र २ बुद्ध्या विनापि
विबुधार्चितपादपीव स्तोतुं समुद्यतमति र्विगतत्रपोहं बालंविहायजलसंस्थित मिंदुबिंब
मन्यः कइच्छति जनः सहसाग्रहीतुं ३ वक्तुं गुणान् गुणसमुद्र शशांककांतान् कस्तेक्षमः
सुरगुरुप्रतिमोपिबुद्ध्या कल्पांतकालपवनोद्धत नक्रचक्रं कोवातरीतुमलमंबुनिधिंभुजा
४ सोहंतथापितवभक्तिवशान्मुनीश कर्तुंस्तवं विगतशक्तिरपि प्रवृत्तः प्रीत्यात्म
यमविचार्यमृगो मृगेंद्रं नाभ्येति किं निजशिशो परिपालनार्थं ५ अल्पश्रुतंश्रुतवतां
परिहासधाम त्वद्भक्तिरेवमु [redacted]

पूजा॰ २४

सर्थ॥ ॥ऐसे रिषभादि जिनेश्वर॥ ॥जगतकूं शांति करो॥

नास्कराः॥ कुर्वंतु जगतः शांतिं॥ रिषभाद्याः जिनेश्वराः

॥९॥ करणं ॥गात्रकौ॥

ण॥ अथेष्टप्रार्थनया प्रथमं करणं॥ ॐ नमः॥ शास्त्राभ्या

अभ्यास जिनेश्वरकूं नमस्कार॥ ॥सत्पुरुषां की संगति॥ भला चारित्र का गुणं

सो जिनपतिनुतिः संगतिः सर्वदार्यैः॥ सद्वृत्तानां गुणगण

की कथा॥ दोषका कहवा विषै मौन॥ सर्वकूं प्यारा हितकारी वचन होऊ॥

कथा दोषवादे च मौनं॥ सर्वस्यापि प्रियहितवचो भाव

आत्मतत्त्व विषै भावना एसवही प्राप्ति होऊ जब तांई मोकूं मुकति न होइ॥

ना चात्मतत्त्वे॥ संपद्यंतां मम भवभवे यावदेतेपवर्गः॥

१०॥ थांका चरण म्हारा मन विषै होऊ म्हारो मन थांका चरण विषै तिष्टो॥

१०॥ तव पादौ मम हृदये॥ मम हृदयं तव पाद द्वये लीनं

हे जिनेंद्र जब तांई मुकति की प्राप्ति होऊ॥ ११॥ ॥अक्षर

तिष्ठतु जिनेंद्र यावत् तावत् निर्वाणसंप्राप्तिः॥११॥ अक्ख

पद॥ अर्थ॥ ॥मात्रा हीन जो मैं कह्या होइ॥ ॥सो क्षमा होऊ॥

रपयत्थहीणं॥ मत्ताहीणं च जं मये भणियं॥ तं खमऊ णा

ज्ञानदेव॥ ॥म्हारा दुःख का क्षय होऊ॥१२॥ ॥दुःख का क्षय होऊ॥

णदेव य मज्झ वि दुःखक्खयं दिंतु॥१२॥ दुःखक्खओ कम्म

कर्म का क्षय होऊ॥ समाधिमरण होऊ॥ सम्यग्ज्ञान का लाभ होऊ॥ जो जगत

क्खओ॥ समाहिमरणं च बोहिलाहो य॥ मम होउ जगत

का हितकारी थांका चरण का सरण करि म्हारै एती होऊ॥

बांधव तुव जिणवर चरणसरणेणं॥ इति शांतिपाठः॥

पठित्वा॥ अत्रापि नमस्कारं करणीयं॥ अथानंतरं पदवी

नतीपठित्वा॥ इति श्री पूजाविधानसमुच्चय संपूर्णं॥

मोक्ष देऊ॥ ॥४॥ ॥उत्कृष्ट जे मुकट कुंडल हार रत्न करि पूज्य॥

...रं पवते परमोच॥४॥ येभ्यर्चिता मुकुटकुंडलहाररत्नैः

इंद्रादि देवी करि पूज्य है। चरणकमल जिनका॥ ॥ते भगवान लोक...

शक्रादिभिः सुरगणैः स्तुतपादपद्माः॥ ते मे जिनाः प्रवर

जगत कूं दीपक॥ ॥तीर्थंकर निरंतर शांति करौ॥ मोक्ष

वंश जगत्प्रदीपाः॥ तीर्थंकराः सततशांतिकरा भवंतु॥ पा

पूजा वाला कूं राजा कूं पालवा वाला॥ ॥यती इंद्र कूं सामान्य तपस्वी कूं॥

संपूजकानां प्रतिपालकानां॥ यतींद्रसामान्यतपोधनानां

देश कूं॥ नगर कूं॥ राजा कूं॥ ॥शांति नाथ भगवान शांति करौ॥

देशस्य राष्ट्रस्य पुरस्य राज्ञः॥ करोतु शांतिं भगवान् जिनेंद्र

॥६॥ ॥अशोकवृक्ष॥ ॥कल्पवृक्षनि की वर्षा॥ ॥दिव्यध्वनि देव॥ सिंहासन॥

...॥६॥ अशोकवृक्षः सुरपुष्पवृष्टिः दिव्यध्वनिश्चामरम

॥भामंडल॥ दुंदुभि वाजित्र॥ छत्र॥ ॥ए जिनेश्वर के अष्ट प्रातिहार्य है

ासनं च॥ भामंडलं दुंदुभिरातपत्रं॥ सत्प्रातिहार्याणि जि

॥७॥ ॥कुशल सर्व प्रजा कूं होऊ॥ ॥बलवान धर्मात्मा राजा होऊ॥

नेश्वराणां॥७॥ क्षेमं सर्वप्रजानां प्रभवतु बलवान् धार्मि

काल काल विषै भले प्रकार मेघ वर्षौ॥ रोग नाश नै प्राप्ति

को भूमिपालः॥ काले काले च सम्यक् वर्षतु मघवा व्या

॥होऊ॥ दुर्भिक्ष चोर॥ मरी॥ जगत कूं एक क्षण भी॥

धयो यांतु नाशं॥ दुर्भिक्षं चौरमारी क्षणमपि जगतां मा

॥मति होऊ॥ ॥जिनेश्वर का धर्मचक्र॥ निरंतर सौख्य दाई होऊ॥

स्मभूज्जीवलोके जैनेंद्रं धर्मचक्रं प्रभवतु सततं सर्व

॥नाश की या है घातिया कर्म॥ ॥केवलज्ञान रूप

सौख्यप्रदायि॥८॥ प्रध्वस्तघातिकर्माणः केवलज्ञान

नमुखकमलसमुद्भवदशलक्षणीकधर्माय नमः । उत्तम
क्षमा । मार्दव । आर्जव । सत्य । शौच । संयम । तप । त्याग । आ
किंचन । ब्रह्मचर्य । इति दशलक्षणीकधर्माय नमः अर्घं महार्घं
निर्वपामीति स्वाहा । ॐ ह्रीं अष्टांगसम्यग्दर्शनाय नमः ॐ
ह्रीं अष्टविधाचाराय सम्यक्ज्ञानाय नमः ॐ ह्रीं त्रयोदश
प्रकाराय सम्यक्चारित्राय नमः ॐ ह्रीं अतीत अनागत
वर्त्तमानकालसंबंधि पंचपरमेष्ठिभ्यः अर्घं महार्घं निर्व
पामीति स्वाहा ॥ इति पूजाविधानं अथ शांतिपठनं ॥ शां

शांतिनाथ भगवान चंद्रतुल्य निर्मलमुख सील गुण व्रत संयम का पात्र
तिजिनं शशि निर्मलवक्त्रं शीलगुणव्रतसंयमपात्रं
एक सौ आठ लक्षण संयुक्त शरीर नमस्कार करूं हूं कमलसमा नेत्र जिनका ऐसे शांतिनाथ कूं
अष्टशतार्चितलक्षणगात्रं नौमि जिनोत्तममंबुज
॥१॥ पंचवां चक्रपद नैं धारक इंद्र चक्रवर्ति गणधर पूज्य
त्रं ॥१॥ पंचममीप्सितचक्रधराणां पूजितमिंद्रनरें
शांतिकर्त्ता शांतिक श्रीसंघ कूं सोलवां तीर्थंकर कूं
द्रगणैश्च । शांतिकरं गणशांतिमभीप्सुं षोडशतीर्थ
नमूं हूं ॥२॥ अशोकवृक्ष पुष्पवर्षा दुंदुभि वाजित्र सिंहासन
करं प्रणमामि ॥२॥ दिव्यतरुः सुरपुष्पसुवृष्टिर्दुंदुभि
योजनप्रमाण दिव्य ध्वनि तीन छत्र दोय चमर जिनकै
रासनयोजनघोषौ । आतपवारणचामरयुग्मे यस्य वि
उज्वल सो है है ॥३॥ जगत पूज्य शांति भगवान शांति
भाति च मंडलतेजः ॥ तं जगदर्चितशांतिजिनेंद्रं शां
॥ शांतिनाथ कौं नमस्कार करूं हूं सर्वगण कूं शांति देऊ ॥ मो कूं ॥
तिकरं शिरसा प्रणमामि । सर्वगणाय तु यच्छतु शांतिं म

आचार्यनिंनमस्कारहोऊ।उपाध्यायनैंनमस्कारहोऊ।लोकविषैसर्वसा

णमोआयरियाणं।णमोउवझायाणं।णमोलोएसव्व
धुकीनमस्कारतितनांपापकीयाहोस्ताकूंस्यागूंरूं।पोटाचारित्रकूंत्यागूं
होऊ
साहूणं।तावकायं।पावकम्मं।दुच्चरियंवोसरा
नौजापकीजे
मि।जाप्यंप्रदीयतेॐस्वाहा।।इतिपूजासंपूर्णं
सम्यक्त
ॐह्रींश्रीसिद्धचक्राधिपतयेसिद्धेभ्योनमः।सम्मत्त
ज्ञान।दर्शन।। अनंतवीर्य।।सूक्ष्मत्वअवगाहन  अगुरुलघु
णाणदंसण।वीरियसुहमंतहेवअवगहणं अगु
अव्याबाध  सिद्धनिकेआठगुण
रुलहुअव्वावाहंअट्ठगुणाहोंतिसिद्धाणं।१।अष्ट
गुणविराजमानश्रीसिद्धचक्राधिपतयेअर्घंमहार्घंनि
र्वपामीतिस्वाहा।ॐह्रींदर्शनविशुद्ध्यैविनयसंपन्न
ताशीलव्रतेष्वनतीचारः।अभीक्ष्णज्ञानोपयोगसंवेग
शक्तितस्त्यागःशक्तितस्तपःसाधुसमाधिर्वैयावृत्त्यकरणं
अर्हद्भक्तिःआवश्यकापरिहाणिःसन्मार्गप्रभावना
प्रवचनवात्सल्यत्वं।दर्शनविशुद्धिः।विनयसंपन्नताय
शीलव्रतेष्वनतीचाराय।अभीक्ष्णज्ञानोपयोगाय
संवेगाय।शक्तिस्त्यागाय।शक्तिस्तितपः।साधुसमाधि
वैयावृत्त्यकरण।अर्हद्भक्तिः।आचार्यभक्तिः।बहुश्रुति
भक्तिः।प्रवचनभक्तिः।आवश्यकापरिहाणि।सन्मार्ग
प्रभावना।प्रवचनवात्सल्यत्वायनमः।षोडशकार
णेभ्यः।अर्घंमहार्घंनिर्वपामीतिस्वाहा।ॐह्रींअर्हं

अकृत्रिम जेजिनप्रतिमा तेसर्वतीनलोकविषे
कट्टिमाणि।जाणिजिणचेइयाणि।ताणिसव्वाणि
भवनवासी व्यंतर
तीसविलोयेसु।भुवणवासीयवाणविंतरजो।
योतिषी कल्पवासी च्यारिप्रकारदेव परिवारसहित
यसियकप्पवासियत्तिचउविहादेवासपरिवा
दिव्यचंदनकरि दिव्यधूपकरि दिव्यनैवेद्यकरि
रादिव्वेणगंधेणदिव्वेणधूवेणदिव्वेणचूणेणदि
दिव्यवासकरि दिव्यकलशाभिषेककरि नित्यकालकरिपूजूंहूं
व्वेणवासेणदिव्वेणण्हाणेण।णिच्चकाले अच्चेमि
वंदूंहूं नमस्कारकरूंहूं दुःखकाकर्मकाक्षय होइ
पुज्जेमि।वंदामिणमंसामि।दुःखक्खओ।कम्म
सम्यग्ज्ञानकालाभहोइ भलीगतिविषैगमनहोइ समाधिमरण
क्खओबोहिलाहोहि।सुगयगमणं।समाहिम
होऊ जिनेश्वरदेवका हमारेगुणहोऊ अर्थप्रातकाल
रणंजिणगुणसंपत्तिहोहमज्झं।अथपूर्वाह्णि
मध्याह्नकाल संध्याकाल त्रिकालदेव वंदना पूर्वआचार्य
कमध्याह्निकअपराह्णिकदेववंदनापूर्वाचा
अनुसारकरि समस्तकर्मकाक्षयकेअर्थि भाव पूजा वंदना
र्यानुक्रमेणसकलकर्मक्षयार्थंभावपूजावंद
स्तुति समेत अरहंतभक्ति प्रतिमाभक्ति कायोत्सर्ग
नास्तवसमेतअरहंतभक्ति।चैत्यभक्ति कायो
करूंहूं अरहंतनैंनमस्कारहोऊ सिद्धांनैंनमस्कारहोऊ
त्सर्गकरोम्यहं।णमोअरहंताणं।णमोसिद्धाणं। १२

भूत भविष्यत वर्त्तमान कालविषै जे जिन हुवा तिनकूं नमस्कार होऊ

नौम्भूतानागतवर्त्तमानसमये तेभ्यो जिनेभ्यो न

२ सोनामयमांन मेरु कुलाचल पर्वत विजयार्द्ध पर्वत सालमलीवृक्ष

मः॥२॥ श्रीमन्मेरौ कुलाद्रौ रजतगिरिवरे साल्म

जंबूवृक्ष वक्षारगिर चैत्यवृक्ष रतिकर रुचिकगिर कुंडलगिर

लौ जंबुवृक्षे वक्षारे चैत्यवृक्षे रतिकररुचिके कुंड

मानुषोत्तर इक्ष्वाकार अंजनगिर दधिमुख पर्वत।

ले मानुषांके इक्ष्वाकारेंजनाद्रौ दधिमुखशिखरे

व्यंतरलोक स्वर्गलोकविषै ज्योतिरलोकविषै जे जिनमंदिर है तिनकूं पृ

व्यंतरे स्वर्गलोके ज्योतिषांके भिवंदे भुवनमहि

थ्वीतलविषै जे जिनमंदिर तिनकूं वंदूं हूं ४ दोय कुंदाका फूल पुष्प चंद्रमा

तले यानि चैत्यालयानि॥३॥ द्वौ कुंदेंदुतुषारहार-

वाला दोय इंद्र नीलमणि समान दोय भिजनाका फूल समान

धवलौ द्वाविंद्रनीलप्रभौ द्वौ बंधूकसमप्रभौ जि

दोय प्रियंगुका फूल समान बाकी सोला तीर्थंकर जनममरणरहित

नवृषौ द्वौ च प्रियंगुप्रभौ॥ शेषाः षोडश जन्ममृ

ताया सोनासमान प्रभा स्योका ज्ञानरूप सूर्य देवां करि पू

त्युरहिताः संतप्तहेमप्रभास्ते संज्ञानदिवाकराः

ज्य हमकूं मुक्ति देऊ इंद्रांकूं नमवन

सुरनताः सिद्धिं प्रयच्छंतु नः॥४॥ इति॥ इच्छामि भं

प्रतिमाभक्ति कायोत्सर्ग आलोचनासहित

ते। चेईयभत्ति काओसग्गो कओ तस्सालोयचेउं

अधोलोक तिर्यग्लोक ऊर्द्धलोक कृत्रिम

अहलोयतिरियलोय उड्ढलोयम्मि किट्टिमा-

धूप फल जलए आठ द्रव्यनि करि श्रेजूं हूं मस्तक करि नमस्कार करि

पू.जा. पैश्च धूपैः फलैः। नीराद्यैश्च यजे प्रणम्य शिरसा ६

खोटा कर्म की शांति कै अर्थि

११ कर्मणां शांतये।। २। ॐ ह्रीं अकृत्रिम कृत्रिम जिन

चैत्यालय संबंधि जिन बिंबेभ्यो अर्घं महार्घ्यं नि

दोय द्वीपांतर विषै पर्वत विषै नंदीश्वर द्वीप

र्वपामीति स्वाहा। वर्षेषु वर्षांतर पर्वतेषु नंदी

विषै जेमै सागिर पर्वत पंच [illegible] द्वीप विषै जितने जिनमंदिर हैं लोक विषै

स्वरे यानि च मंदिरेषु। यावंति चैत्यायतनानि लोके

सर्व कूं वंदूं हूं जिनेश्वरदेव कूं पृथ्वीतल विषै प्राप्ति भए

सर्वाणि वंदे जिन पुंगवानां।। ३। अवनितलगता

कृत्रिम अकृत्रिम जिनमंदिर वन विषै भवन विषै सुंदर विमान

नां कृत्रिमाकृत्रिमानां। वन भवन गतानां दिव्य

विषै इह मनुष्यां करि कराया अथवा देवां करि पूज्य जिनमंदिर कूं वंदूं हूं

वैमानिकानां। इह मनुज कृतानां देवराजार्चि

भावथकी स्मरण करूं हूं

तानां। जिनवर निलयानां भावतोहं स्मरामि।

जंबूद्वीप धातकीद्वीप आधा पुष्करार्द्ध विषै इन तीन द्वीपां विषै

४ जंबूधातकि पुष्करार्द्ध वसुधा क्षेत्रत्रये ये भवा

चंद्रमा कमल मोर कंठ सुवर्ण समान वर्षाकाल का मेघ समान जिन

श्चंद्रांभोज शिखंडिकंठ कनक प्रावृड्घनाभा जिना

सम्यग्ज्ञान चारित्र लक्षण नै धारे हैं जलाए हैं आठ कर्म ईंधन

सम्यग्ज्ञान चरित्र लक्षण धरा दग्धाष्ट कर्मेंध १९

जेतपविषैसूरवीरहै संयमविषैधीरहै मुक्तिकी
११
हावांछ्या ॥ जेतपिसूरा संयमधीरा ॥ सिद्धिव
काअनुरागीहै रत्नत्रयकरिरंजितहै कर्मकानाशकरनेवाला
धूअणुराइया ॥ रयणत्तयरंजियकम्मइंगंजि
त्यांरिषिवरकूंमैंध्यांऊंहूं
यते रिसिवरमइंझायया ॥ १ ॥ ॐ ह्रीं सुधर्माचा
र्यादिगुरुभ्योनमः पुलाकवकुश कुशीलनि
र्ग्रंथगुरुभ्यः अर्घं महार्घं निर्वपामीतिस्वाहा ॥
मतिगुरुजयमालार्घं ॥ ॐ ह्रीं श्रीविदेहक्षेत्रेषुविह
रमाणतीर्थंकरेभ्योनमः ॥ सीमंधरजी युगमंध
रजी ॥ बाहुजी सुबाहुजी संजातजी स्वयंप्रभु
जी ॥ रिषभाननजी अनंतवीर्यजी सूरप्रभुजी
विशालकीर्त्तिजी वज्रधरजी ॥ चंद्राननजी चं
द्रबाहुजी भुजंगमजी ॥ ईश्वरजी नेमिप्रभुजी
वीरसेनजी महाभद्रजी देवजसजी ॥ अजित
वीर्यजी ॥ विदेहक्षेत्रेषुविंशतितीर्थंकरेभ्यः अ
र्घं महार्घं निर्वपामीतिस्वाहा ॥ श्रीरस्तुः
कृत्रिमअकृत्रिमसुंदरप्रतिमाकासमूहजिनमंदिर तीनलोककरि
कृत्याकृत्यमचारुचैत्यनिलयान्नित्यं त्रिलो
निरंतर वंदूंहूंभवनवासी व्यंतर ज्योतिषी स्वर्गवासी देवकाजि
कीगतान् वंदेभावनव्यंतरद्युतिवराकल्पा
नमंदिर सद्धमीनीगंधाक्षत पुष्पसुंदर नैवेद्य दीप
मरासर्वगान् सद्गंधाक्षतपुष्पचारुचरुभिर्दी

जेवृक्षनीचैंवर्षाकालमैंरहैहै    जेमौंनधारैहै    जेआयणतपकरैहै
ग्रीषमकालमैंआतापयोगधारैहै २

रुक्खमूलआतावणीया॥२॥जेमउणधाइचंदाय

जेजीवैंतीवैंवेगिरहैहै    जेपंचमहाव्रतका

णीय।जेजल्लमल्लवणिणिवासणीय।जेपंचमह

धारनमैंधीरवीरहै    जेसमितिगुप्तिकापालैहै

व्वयधरणधीरा।जेसमितिगुत्तिपालणहवीरा।

जेवर्तैहै देहसंविरक्तचित्त    जेरागद्वेष मोह नयकरि

३।जेवट्टहिदेहविरत्तचित्ता।जेरायरोसभय

रहितहै    जेकुगतिका आछादनकीयाहै लोभकरिरहितहै

मोहापत्ता।जेकुगइहिंसंवरुविगयलोहा।जे

जेदुरितकहिएपाप कामक्रोधकाविनाशकीयाहै    ज्यांकापसेवमैलक

दुरियविणासणकामकोहा।४।जेजल्लमल्ल

लिप्तशरीरहै    जेआरंभपरिग्रहकरिरहितहै    जे

तणिलित्तगत्ता।आरंभपरिग्गहजेविरत्ता।जे

तीनूंकालवाहिरगमनकरैहैं    जेवेलातेलाचौलातपकरैहै

तिण्णिकालवाहिरगमंति।छट्ठट्ठमदसमउ

५ जेवारहप्रकारसंयमधारैहै    जे

तउचरंति।५।वारहविहसंजमुजेधरंति।जे

च्यारूंविकथानैंत्यागैहै    जेवाईसपरीसहसहैहै

चारिउविकहापरिहरंति।वावीसपरीसह

जेसंसारसमुद्रकूंतिरैहै    ६ जेएकगास

जेसहंति।संसारमहण्णउतेतरंति।६।जेइक्क

दोइगासहीभोजनकरैहै    जेरसरहितभोजनकरैहै

गासदुइगासलिंति।जेनीरसभोयणरय।

अज्ञान अंधकारकूं मेटै है सुखका कारण भक्तिकरि मैं जिनवाणीकूं

हातमणासइसुरकविहाणपयच्चउजनत्तिजरेय।

सदानमूं हूं  पदबारहसैकोडि  तियासीलख

वियाणि॥सयाणं॥पयाणिसुवारहकोडिसएण

युक्तिकरि संयुक्त  अठावन हजार

सुलरकतिरासियजुत्तिजरेण॥सहसअगव

पांच १२ जिनवाणीका है सदा जिनवाणीकूं नमूं हूं ११  इक्यावन कोडि

णपंचवियाणि॥सयाणं॥णे॥इक्कावणकोडि

आठलाख  चौरासी लाख छसै [illegible]

लरकअठेव॥सहसचुलसीदिसयाछक्केव॥

एकपदका होइ  सदा जिनवाणीकूं नमूं हूं १२

स[illegible]इगवीसहंगथपयाणि॥सयाणं॥१२॥घत्ता

ऐसे जिनवाणीकूं.  जो बुद्धिवान  भव्यजीव अपणा

इयजिणवरवाणिविसुद्धमई जोभवियणणि

मनमैं धारै  सो इंद्र चक्रवर्त्तिका सुखनैं पाइ

यमणिधरइ॥सोसुरणरिंदसंपइलहिविके

केवलज्ञानकूं

वलणाणविउत्तरई॥१३॥ॐ ह्रीं श्रीसरस्वती

वाक्वादनी द्वादशांगश्रुतज्ञानेभ्यो नमः॥

आचारांग सूत्रकृतांग॥स्थानांग॥समवायां

ग॥व्याख्याप्रज्ञप्तिः॥ज्ञातृकथा॥उपासकाध्य

तितीर्थंकरेभ्यो नमः॥श्री रिषभजी॥अजितजी॥संभवजी॥अभिनंदनजी॥सुमतिजी॥पद्मप्रभुजी॥सुपार्श्वजी॥चंद्रप्रभजी॥पुष्पदंतजी॥शीतलजी॥श्रेयंसजी॥वासपूज्यजी॥विमलजी॥अनंतजी॥धर्मजी॥शांतिजी॥कुंथुजी॥अरजी॥मल्लिजी॥मुनिसुव्रतजी॥नमिजी॥नेमिजी॥पार्श्वनाथजी॥वर्द्धमानजी॥चतुर्विंशतितीर्थंकरेभ्यः॥अर्घं महार्घं निर्वपामीति स्वाहा॥इति देवजैमालार्घं॥अथ शास्त्रजैमाल लिख्यते॥

विद्यमानसुखका कारणकर्मकाभेदनेवाला संसारसमुद्रकातारण
संपइसुहकारणकम्मवियारण।भवसमुद्दता

तरण ऐसीजोजिनवाणीकूंनमस्कार शक्तिप्रगटकरि स्वर्गमोक्षका कारिकै
१० रण।जिणवाणनमंसमि।सत्तिपयासमि।सग्गमो

सुखकरणेवाली जिनेंद्रकामुखसूंउत्पन्नभईसुंदरध्वनि
क्खसंगमकरणं॥जिणिंदमुहाउविणिग्गयता

गणधरदेवरचनाकरी ग्रंथभेद त्रिलोकमंडन
रागणिंदविगुंफियगंथपयारा।तिल्लोयहमंडा

धर्मकीखानिसदाही जिनवाणीकूंनमूंहूं १
णधम्महखाणि।सयापणमामिजिणिंदहवाणि

अवग्रह ईहा अवाय धारणानैआदिदेकरि
॥१॥अवग्गहईहसुवायजुएहिं।सुधारणभेयइति

भेदमतिज्ञान वहुरिआदितीनसैछत्तीस
मिसएहिंमईछत्तीसवहुप्पमुहाणि।सयावर

श्रुतज्ञानदोयप्रकार अनेकप्रकारवारहप्रकार जगत्रयमैंसार
सुदंपुणदोणि।अणेयपयारसुवारहभेयजगत्त

